*The Adyar Library Series—No. 57*

GENERAL EDITOR:

G. SRINIVASA MURTI, B.A., B.L., M.B. & C.M., VAIDYARATNA

*Director, Adyar Library*

# UNMATTARĀGHAVA

BY

VIRŪPĀKṢADEVA

# उन्मत्तराघवं नाम प्रेक्षणकम्

विरूपाक्षदेवकृतम्

# UNMATTARĀGHAVA

BY

VIRŪPĀKṢADEVA

EDITED BY

VYĀKARAṆAS'IROMAṆI V. KRISHNAMACHARYA

THE ADYAR LIBRARY

1946

## FOREWORD

THE present publication—*Unmattarāghava* of Virūpākṣa—is a hitherto unpublished work. A different work under the same name but by a different author—Bhāskarabhaṭṭa and a different plot was published at Bombay in 1889 as No. 17 of the Kāvyamālā Series. It was edited and published on the basis of a manuscript belonging to that versatile scholar Pandit S. Subramania Sastri, late of the Adyar Library. So far as our knowledge goes, the only manuscript of the present work is the one in the possession of the Adyar Library, on the basis of which the present work has been edited. No other manuscript was available for collation. A note on the work appears in the *History of Classical Sanskrit Literature* by the late Dr. M. Krishnamacharya; and the only reference given by him is to the manuscript deposited in the Adyar Library. Both works—the one by Bhāskarabhaṭṭa published in the Kāvyamālā Series in 1889 and the other by Virūpākṣa published now in the Adyar Library Series—have certain features in common. They are both One—Act Dramas of the class of *Prekṣaṇaka*; S'rī Rāmacandra is the hero in both; and both seek to portray *vipralambhasṛṅgārarasa* when

the hero-lover becomes distracted (*unmatta*) by separation (*vipralambha*) from the beloved—heroine. Other special features are given in the Sanskrit introduction of the learned Editor.

It is indeed very fortunate that the scholarly services of so eminent a Pandit as Sriman V. Krishnamacharya were available to the Adyar Library for editing the present work. He has brought to bear on the work of editing his vast learning and keen enthusiasm for the spread of Sanskrit learning. On behalf of the Adyar Library, I tender to him my most grateful thanks.

The Adyar Library
*7th Nov. 1946*

G. SRINIVASA MURTI,
*Hon. Director*

---

# उपोद्घातः

प्रायशो विदितचरमेव सर्वेषां यच्चिरंतना विजयनगरभूपाला आजानसिद्धविद्याभिनिवेशभासुराः, न केवलं पदवाक्यप्रमाणेषु तर्ककर्कशेषु तन्त्रेषु, अपित्वास्वादमधुरेषु काव्यनाटकादिषु गीतशिल्पादिषु कलाभेदेष्वपि निरतिशयमादरमाबिभ्रतो बहुभिर्विपश्चिद्भिरनेकान् ग्रन्थानकारयन् स्वयं च निरमिमतेति। तेषु च भूपालेषु बुक्कहरिहरविरूपाक्षभूपत्यादयो विशेषतो गणनामर्हन्ति, येषां सबहुमानमादरातिशयमवाप्य तद्राज्यधुरंधराः सभास्ताराश्च माधवसायणचौण्डपाचार्यादयो वेदभाष्यप्रयोगरत्नमालादीननेकान् ग्रन्थानरचयन्। तत्र क्रैस्तवाब्देषु चतुर्दशे शतके[1] बुक्कहरिहरौ विजयनगरे राज्यमकारयताम्। तत्रैव पञ्चदशशतकारम्भे[2] हरिहरपुत्रो विरूपाक्षो राज्यमपालयत्। विरूपाक्षसोदरस्य द्वितीयबुक्कस्य सूनुर्भूपतिनामा। तस्य सभामलंकृतवता मन्त्रिणा विदुषा च चौण्डपाचार्येण क्रैस्तवपञ्चदशशतके प्रयोगरत्नमालाभिधः श्रौतग्रन्थो विरचितः। एवमन्येऽपि राजानो विद्याभिनिवेशिनः पण्डितवराननेकानाद्रियन्तेत्यवगम्यते।

तत्र योऽयं हरिहरात्मजो विरूपाक्षस्तेनैवेदमुन्मत्तराघवाभिधानं प्रेक्षणकं विरचितम्। तथा नारायणीविलासाख्यमपरं नाटकमप्यनेनैव विरचितम्, यस्य पुस्तकं मद्रपुरीराजकीयलिखितपुस्तकालये वर्तते[3]।

[1] T. V. Mahalingam specifies the period as 1356-1404 A.D.

[2] " " 1404-1406 A.D.

[3] Vide No. 19. Page 90. Seshagiri Sastri's Report No. I.

आभ्यां च रूपकाभ्यां विरूपाक्षभूपालोऽयं बुक्कभूपालस्य पौत्रो रामराजस्य दौहित्रो हरिहरराजस्यात्मजः सिंहलद्वीपं विजित्य भारतवर्षस्य दक्षिणस्यां दिशि कर्णाटतुण्डीरचोलपाण्ड्यसिंहलाधिपतिस्तुण्डीरदेशे मरकतपुरं नाम[1] नगरमधिवसन्नवर्ततेति च ज्ञायते । क्रैस्तवे १३८५ तमे वत्सरे हरिहरभूपते राज्यधुरां वहन्नसौ दण्डयात्रां विधाय सिंहलद्वीपं विजित्य स्वायत्तीचकारेति सप्रमाणमवगम्यते[2] ।

सोऽयं सकलकलाविलासिनीस्वयंवरपतिर्विरूपाक्षदेवः,

"न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः ।
नासौ योगो न तज्ज्ञानं नाटके यन्न दृश्यते ॥"

इत्युक्तरीत्या दृश्यकाव्यस्य सहृदयहृदयाह्लादनपटुतरतामाकलय्य संग्रहरुचीनां प्रेक्षकाणामाप्यायनाय प्रेक्षणकं नामेममेकाङ्कमुत्तमनायकं शृङ्गारमयमुपरूपक-भेदमुपनिबबन्ध । यद्यपि श्रव्यदृश्यकाव्ययोरुभयोरपि सामाजिकरसा-स्वादजनकत्वं साधारणम्, तथापि तत्र श्रव्यकाव्यमपेक्ष्य दृश्यकाव्यस्य कश्चनातिशयो वर्तते । काव्यजन्यरसास्वादः सामाजिकानामेव, न नाय-कस्य, न वा नटस्येति सर्वेषामालंकारिकाणां सिद्धान्तः । परंतु रामा-यणाद्युत्तमकाव्यश्रवणेन यदा सामाजिकानां मनसि रसास्वाद उदेतुमारभते तदैव रामादीन् नायकान् बुद्ध्योल्लिख्य पुरोऽवस्थाप्य तदीयहृदयस्य स्वकी-यहृदयस्य चाभेदमध्यवस्य रत्यादीनां भावानां स्वहृदये परिपोषमाकलय्य शृङ्गारादीन् रसानास्वदन्ते सामाजिकाः । तत्र बौद्धानां रामादीनां यावन्न बुद्ध्यन्तरैस्तिरोधानं तावदेव रसपरिपोषः । चञ्चलैकस्वभावस्य मनसः प्रत्यक्षं

[1] Dr. S. Krishnaswami Ayyangar identifies Marakatapura with modern Virincipuram.

[2] Vide page 175, Administration and Social Life under Vijayanagar by T. V. Mahalingam 1940.

किंचनालम्बनमन्तरा क्वचिदेकत्र दृढमवस्थापनं नामातिदुष्करम् । तस्मान्नूनमस्ति तत्र रसास्वादस्य पदे पदे विच्छेदसंभावना । दृश्यकाव्ये तु प्रत्यक्षदृश्ये नटे रामाद्यभेदं सुदृढमध्यवस्य तदीयहृदयस्य स्वकीयहृदयस्य चाभेदमाकलय्य भावानां परिपोष इति न पदे पदे तद्विच्छेदसंभावना । यदाह कुमारस्वामिसोमपीथी रत्नापणे—"प्रथमं तावत् काव्याभिनयाभिनिविष्टस्य सामाजिकस्य रसप्रादुर्भावसमये नटे रामादिप्रतीतिदार्ढ्यमुत्पद्यते" इति । तच्च दार्ढ्यं निपुणनटकार्यमिति प्रायशो नाटकारम्भे सूत्रधारो नटनैपुणसंपत्तिं प्रयोगौपयिकेषु साधनेषु प्रधानतमां निर्दिशति । नटे नायकाभेदाध्यवसायरूपाद्रूपणाद्धि नाटकं रूपकमिति व्यपदिश्यते । तत्राप्युत्तमनायकसंबद्धमेवेतिवृत्तमखिलरसिकजनरञ्जनचणमिति कृत्वा पुरुषोत्तमस्यानवद्यचरितस्य भगवतो रघूत्तमस्येतिवृत्तं संजग्राह कविः । न हि सुचिरमन्विष्यापि रघुपतेरपरं कंचिदुत्तमोत्तमं नायकं वर्णनाय कवयो लब्धुं प्रभवन्ति । यदाह सारस्वतसारग्राही महाकविर्मुरारिभट्टः—

"यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं
गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः ।
स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुरं
स्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ॥"

इति । रूपकमिदं तिरुवण्णामलै इति प्रथिते श्रीमत्यरुणाचले कृतावतरणस्य भगवतः पार्वतीजानेः रथोत्सवसमये कृताभिनयमिति सूत्रधारवचसैवावगम्यते ।

प्रेक्षणकलक्षणं चेत्थमुपवर्णितम् । यथा शृङ्गारप्रकाशे—

"रथ्यासमाजचत्वरसुरालयादौ प्रवर्त्यते बहुभिः ।
पात्रविशेषैर्यत्तत् प्रेक्षणकं कामदहनादि ॥"

इति। तथा भावप्रकाशे शारदातनयः—

"गर्भावमर्शरहितं सर्ववृत्तिसमन्वितम्।
प्रभूतमागधीशौरसेनीकं रसभावयुक्॥
द्विसन्धीति वदन्त्येतदुत्तमाधमनायकम्।
भारत्यारभटीयुक्तं क्वचित् स्यात्तस्य सात्त्वती॥
यथा वालिवधाख्यश्च नृसिंहविजयो यथा।
पूर्णनेपथ्यपाठैर्वा नान्दी तस्य विधीयते॥
क्वचिद्गर्भावमर्शौ स्तः क्वचिद्वृत्तिचतुष्टयम्।
क्वचिन्नेपथ्यवाक्याढ्यं न कदाचन सूत्रधृत्॥
एवं प्रेक्षणकं विद्याद्यथा त्रिपुरमर्दनम्।"

इति। एतदेव प्रेङ्खणकमिति साहित्यदर्पणे विश्वनाथेन व्यवहृतम्। यदाह—

"गर्भावमर्शरहितं प्रेङ्खणं हीननायकम्।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम्॥
नियुद्धसंफेटयुतं सर्ववृत्तिसमाश्रितम्।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना॥"

इति। अत्र हीननायकमसूत्रधारमित्यादि पक्षान्तराभिप्रायम्। अत एव शारदातनयेन 'उत्तमाधमनायकम्' इति लक्षयित्वा तस्य वालिवधनृसिंहविजयौ निदर्शनभूतावुक्त्वा 'पूर्णनेपथ्यपाठैर्वा' इति वापदघटितं पक्षान्तरमारभ्य 'न कदाचन सूत्रधृत्' इत्युक्त्वा त्रिपुरदहनादिकं निदर्शितम्। एवंच प्रेक्षणकमुदात्तनायकं वाधमनायकं वेति ससूत्रधारमसूत्रधारं वेति चानास्था तल्लक्षकाणाम्। प्रकृत उन्मत्तराघवे तूत्तमनायकः सूत्रधारप्रवेशश्चादृतः कविना।

रसश्चात्र शृङ्गारः । तत्रापि विप्रलम्भः समादृतः, तत्रैव रसपरिपोषातिशयाद्भावुकानाम् । यदाह—

"न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागोऽनुषज्यते ॥"

इति ।

रावणापहृतायाः सीताया वियोगेन चेखिद्यमानमानसस्य रामचन्द्रस्य विप्रलम्भशृङ्गारमुपवर्णयन् कविस्तत्परिपोषणेन तदास्वादहेतुभूतेषु त्रयस्त्रिंशति व्यभिचारिभावेषु रस्यतममुन्मादरूपं भावं वर्णयति । तत्र चोन्मादस्य पक्लिमावस्थाभूतं वैचित्र्यं तदुपष्टम्भनीमतस्मिंस्तद्ग्रहरूपां विश्रान्तिं च विशेषतो वर्णयति । उन्मादलक्षणमाह धनंजयः—

"अप्रेक्षाकारितोन्मादः संनिपातग्रहादिभिः ।
अस्मिन्नवस्था रुदितगीतहासासितादयः ॥"

इति । भोजोऽपि—"उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः" इति । शिङ्गभूपालोऽपि—

"सर्वावस्थासु सर्वत्र तन्मनस्कतया सदा ।
अतस्मिंस्तदिति भ्रान्तिरुन्मादो विरहोद्भवः ॥"

इति । तथा हेमचन्द्रोऽपि—"इष्टवियोगादेरुन्मादोऽनिमित्तस्मितादिकृत् । इष्टवियोगधननाशाभिघातवातसंनिपातग्रहादिभिश्चित्तविप्लव उन्मादः । तमनिमित्तस्मितरुदितोत्क्रुष्टगीतनृत्यप्रधावितोपवेशनोत्थानासंबद्धप्रलापभस्मपांसूद्धूलननिर्माल्यचीवरघटचक्रशरावाभरणादिभिर्वर्णयेत्" इति ।

तत्र,

"कच्चित् क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनोद्देशे मया विरहिता त्वया ॥"

"हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।
संभावितैकदेशेन देयं यदभियुज्यते ॥"

इत्यादिकविना भगवता वाल्मीकिना कविचक्रवर्तिना कालिदासेन च वर्णितामसंबद्धप्रलापरूपामुन्मादावस्थाम्, "आः क्षुद्रराक्षस तिष्ठ तिष्ठ । क्व मे प्रियतमामादाय गच्छसि" इति वर्णितां विभ्रमावस्थां च मनसिकृत्य बहुधात्र ते अवस्थे सहृदयहृदयाह्लादन्या रीत्या वर्णिते । अन्ततो लक्ष्मणो रावणं संख्ये निहत्य सीतां रामसमीपमानिन्य इति कथा वर्णिता । अत्र लक्ष्मणेनैकेनैव रामचन्द्रपादाम्बुजसेवामहिम्ना ससैन्यो रावणो वानरसैन्यैर्निपातित इति वर्णयन् कवी रामचन्द्रस्य प्रभावोत्कर्षं सविशेषमुद्घाटितवानिति सहृदया मोदन्ते ।

अस्ति चापरमुन्मत्तराघवं नाम प्रेक्षणकं भास्करकविकृतं काव्यमालायां मुद्रितम् । अनेन भास्करकविनापि प्रायशो विजयनगरास्थानसंबद्धेनैव भाव्यमित्युन्नेतुमस्त्यवसरः । तत्र तु कविनेतिवृत्तमेवं परिकल्पितम्—यदा रामः कनकहरिणच्छद्मनाश्रमपथेन संचरमाणं मारीचं जीवग्राहं गृहीत्वाश्रमपदं प्रत्यावृत्तस्तदा प्रियतमां जानकीमुटजे नापश्यत् । तेन तद्विरहासहनो रामचन्द्र उन्मादावस्थापन्नस्तरुलतादीन् प्रियोदन्तमनुयुञ्जानो बभ्राम । ततो भगवतागस्त्येन मुनिना सीतां रामस्य हस्ते समर्प्यैवमभिहितम्—वत्स रामभद्र, वत्सैषा जानकी पुष्पाण्यवचिन्वती दुर्वाससोषितपूर्वं काननोद्देशं प्रविष्टवती सद्य एव हरिणी संजाता । ततो वनेष्वितस्तत उत्प्लुत्योत्प्लुत्य संचरन्ती

ममाश्रमसविधमागता । तां चाहं योगदृष्टिमहिम्ना जानकीमित्थंभूतामवगत्य तपोबलेन तां प्रकृतिस्थां विधाय त्वदन्तिकमुपनीतवानस्मीति ।

अस्य च मुद्रणे उपयुक्तम् अडयार् पुस्तकालये विद्यमानं ताल-पत्रमयं पुस्तकमेकमेव । आदर्शान्तरं कुत्रापि पुस्तकालये न दृश्यते । अन्यासु पुस्तकसूचीष्वपि कुत्राप्येतन्नाम न दृश्यते । भाषाचरित्रविमर्शकेष्वपि एम्. कृष्णमाचार्यमेकमन्तरा न कोऽप्येतन्नामोल्लिखन् दृश्यते । एम्. कृष्ण-माचार्योऽप्यत्रत्यमेव पुस्तकं निरदिशदिति सर्वथा दुर्लभोऽयं ग्रन्थ आसीदिति सुधीरं वदामः । पुस्तकस्यैकस्य साहायकेनैवेदं रूपकमिदंप्रथमं मुद्रयित्वा प्रकाशितम् । अस्य च मुद्रणे साहायकमाचरितवतः पण्डितस्य रामचन्द्र-शर्मणः कृते महतीमुपकारचिन्तां धारयामः । अत्र डाक्टर्-कुन्हन्राज-महाशयस्य श्रीनिवासमूर्तिमहोदयस्य चानुकूल्यं न विस्मरणार्हम् । वसन्ता-मुद्रणालयाधिकृतानामौत्सुक्यमप्यत्र विशेषतः श्लाघनीयम् ।

वे. कृष्णमाचार्यः

---

# उन्मत्तराघवं नाम प्रेक्षणकम्

## विरूपाक्षदेवकृतम्

हेरम्बाय नमस्तस्मै यद्ब्रण्डगृहमेधिनाम् ।
मधुव्रतानां संगीतवैखरी भवति त्रयी ॥ १ ॥

अम्भोजसंभवमुखाम्बुजराजहंसी
वाल्मीकिकोकिलविलासवसन्तलक्ष्मीः ।
द्वैपायनाम्बुधिविजृम्भणचन्द्ररेखा
वाग्देवता विजयतां कविकामधेनुः ॥ २ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(नेपथ्यं प्रति) आर्ये, विज्ञापितोऽहमरुणाचलनाथस्य रथोत्सव-सभास्तारैः ।

(प्रविश्य)

**नटी**—अय्य, कीरिसो णिदेसो अय्यमिस्साणं ?

(आर्य, कीदृशो निदेश आर्यमिश्राणाम् ?)

**सूत्रधारः**—

पौत्रो बुक्कनरेन्द्रस्य दौहित्रो रामभूपतेः ।
विद्यते हि विरूपाक्षो राजा हरिहरात्मजः ॥ ३ ॥

नटी—णं सो सअळकळाविअक्खणो तुण्डीरमण्डळमण्डणं मरगअउरं अळंकरेइ ।

(नन्वेष सकलकलाविचक्षणस्तुण्डीरमण्डलमण्डनं मरकतपुरमलंकरोति ।)

सूत्रधारः—तस्य राज्ञः कर्णाटतुण्डीरचोलपाण्ड्यमण्डलाधिपतेः सिंहलद्वीप-विन्यस्तविजयस्तम्भस्य षोडशमहादानदीक्षितस्य सकलकलाविला-सिनीस्वयंवरपतेः कृतिमुन्मत्तराघवं नाम प्रेक्षणकं प्रयोगतो दर्शयेति ।

नटी—(सहर्षम्)

णूणं इमस्स महुराइ सुहासिआइ
आणंदबंधचरिअं पहुणो रहूणं ।
अह्मो पओअणिउणा गुणमेत्तळग्गा
सामाइआ इह ण किं णु सिळाहणिज्जं ॥ ४ ॥

(नूनमस्य मधुराणि सुभाषितान्यानन्दबन्धचरितं प्रभो रघूणाम् ।
वयं प्रयोगनिपुणा गुणमात्रलग्नाः सामाजिका इह न किं नु श्लाघनीयम् ॥)

सूत्रधारः—(पुनर्नेपथ्यं प्रति) शृणुत भो भरताः,

श्रयत कतिचिद्भक्त्या संगीतमङ्गलदेवतां
कुरुत मुरजध्वानैः केचित्कलैर्मुखरा दिशः ।
सरसमुचितैरन्ये रागैर्निषिञ्चत वाङ्मयं
बिभृत च परे तूर्णं नानाविधामिह वर्णिकाम् ॥ ५ ॥

नटी—अय्य, मह वि आणवेहि करणिज्जं ।

(आर्य, ममाप्याज्ञापय करणीयम् ।)

**सूत्रधारः**—आर्ये, त्वयापि समयोचितं गीयताम् । संप्रति हि—

वनतरुसुभगंकरणी मृदुपवना मुखरकोकिलभ्रमरा ।
ललिता वसन्तवेला सुखिनोऽपि करोति सोत्कण्ठान् ॥ ६ ॥

**नटी**—

ओसाअसंणिरुद्धं पुणो वि आसासिअं वसंतेण ।
आणंदेइ पदुमिअणीं अणुराअमहप्पिअं सूरो ॥ ७ ॥

(अवश्यायसंनिरुद्धां पुनरप्याश्वासितां वसन्तेन ।
आनन्दयति पद्मिनीमनुरागमहाप्रियां सूर्यः ॥)

**सूत्रधारः**—स्थाने वस्तुसंवादिता गीतस्य ।

**नटी**—(सदृष्टिक्षेपम्) कहं कआ एव्व रंगाजीवेहिं भूमिआ ?

(कथं कृता एव रङ्गाजीवैर्भूमिकाः ?)

**सूत्रधारः**—अथ किम् ।

कैकेय्याः प्रियकारणाद्दशरथस्याज्ञां वहन्मौलिना
सीतालक्ष्मणसेवितो रघुपतिः प्राप्तो वनं दण्डकाम् ।
हन्ता शूर्पणखाभिषङ्गमिलितानेकः खरादीनसौ
मारीचेन दशाननार्थमधुना मायाविना वञ्च्यते ॥ ८ ॥

**नटी**—ता अम्हो वि सज्जीहवामो अणंतरकरणिज्जस्स ।

(तस्माद्वयमपि सज्जीभवामोऽनन्तरकरणीयस्य ।)

(इति निष्क्रान्तौ)

**प्रस्तावना**

---

(ततः प्रविशति यथानिर्दिष्टो रामः)

**रामः**—प्रिये जनकनन्दिनि, पश्य पश्य—

श्रृङ्गेण माणिक्यमयेन दन्तैर्मुक्तामयैर्वज्रमयैः खुरैर्नः ।
वालेन नीलाश्ममयेन चासौ कौतूहलं हेममृगः करोति ॥ ९ ॥

**सीता**—णं पेक्खामि ।

गइरहसगुम्भिएहिं रअणमआणं रुइहि अङ्गाणं ।
सअमहसरासणाइं विरअईव महीअळे हरिणो ॥ १० ॥

(एनं पश्यामि ।
गतिरभसगुम्भितै रत्नमयानां रुचिभिरङ्गानाम् ।
शतमखशरासनानि विरचयतीव महीतले हरिणः ॥)

**रामः**—

मरकतरुचा जङ्घाकाण्डेन शाद्वलयन्महीं
कुवलयमयीराशाः कुर्वन्नपाङ्गविवर्तनैः ।
गगनमखिलं गात्रोद्द्योतैः सविद्युदिवावहन्
कनकहरिणः कोऽयं मेरोः किशोर इवागतः ॥ ११ ॥

(सर्वे सकौतुकं पश्यन्ति)

**सीता**—अय्यउत्त, गहिज्जदु जीवग्गाहं एसो । णं उण दब्भंकुरेहिं वड्ढिअ अओज्झं णइस्सामि ।

(आर्यपुत्र, गृह्यतां जीवग्राहमेषः । एनं पुनर्दर्भाङ्कुरैर्वर्धयित्वा अयोध्यां नेष्यामि ।)

**लक्ष्मणः**—आर्ये, नौपयिकोऽयं प्रयत्नः ।

वयमपकृतवन्तो यज्जनस्थानभाजा-
मतिकुटिलमतीनां भूयसां राक्षसानाम् ।

नियतमिदमपि स्याद्छद्मनं गूढवेषो
रचयितुमुपयातः कोऽपि नक्तंचरो नः ॥ १२ ॥

**सीता**—वच्च ळक्खण, णिहएसु खरदूसणतिसिरप्पमुहेसु रक्खसेसु णारुहसि अवए उप्पेक्खिदुं पच्चूहं कोउहळस्स ।

(वत्स लक्ष्मण, निहतेषु खरदूषणत्रिशिरःप्रमुखेषु राक्षसेषु नार्हस्यपदे उत्प्रेक्षितुं प्रत्यूहं कौतूहलस्य ।)

**रामः**—वत्स लक्ष्मण,

सारङ्गो यदि कार्यमेव हि तथा सीता यथाशंसते
रक्षश्चेदभयप्रदस्य यमिनां मृग्यं किरीटं मम ।
गत्वाहं विनिवृत्त एष सहसा जागर्तु तावद्भवा-
नेतस्याः परिरक्षणाय भरतः साकेतलक्ष्म्या इव ॥ १३ ॥

(इति मृगानुसारेण परिक्रामति)

**लक्ष्मणः**—(अग्रतो दत्तदृष्टिः)

आर्योऽन्वेति मृगं हैमं धन्वी कौतूहलान्वितः ।
ऐरंमदमिव ज्योतिः पवनप्रेरितो घनः ॥ १४ ॥

**सीता**—

पाळेइ अय्यउत्तो जह जह पुरदो मणिप्पहाएव्व ।
तह तह मज्जइ मंदं मम हिअअं अंधआरम्मि ॥ १५ ॥

(पलायत्यार्यपुत्रो यथा यथा पुरतो मणिप्रभेव ।
तथा तथा मज्जति मम हृदयमन्धकारे ॥)

**रामः**—सावकाशेव शङ्का वत्सलक्ष्मणस्य । यतः—

पुरस्तादाधावत्यतिजवमुदस्ताग्रचरणो
विवृत्तग्रीवः सन्नसकृदयमालोकयति माम् ।
क्षणाद् दृश्यः पार्श्वे निवसति करग्राह्य इव मे
क्षणं भूयो दृष्टेरपि न विषयं याति हरिणः ॥ १६ ॥

किंच,

अग्रे पश्चात्पार्श्वयोरूर्ध्वमर्वागालक्ष्योऽसावुत्पतन् यौगपद्यात् ।
दृष्टिं धत्ते मय्यपि क्रूरतारं नैतद्वन्येष्वन्यसत्त्वेषु मन्ये ॥ १७ ॥

(इति निष्क्रान्तः)

**लक्ष्मणः**—(स्वगतम्)

अयमन्तरितो वनान्तवृक्षैर्निबिडैरिन्दुरिवाम्बुदैर्ममार्यः ।
अधुनाप्यनिवृत्त एव कस्मान्ननु मायाहरिणेन वञ्चितः स्यात् ॥ १८ ॥

**सीता**—कहं दाणिं अय्यउत्तोवि चिरअइ । फुरइ मे दक्खिणं णअणं ।
(कथमिदानीमार्यपुत्रोऽपि चिरयति । स्फुरति मे दक्षिणं नयनम् ।)

(नेपथ्ये)

हा लक्ष्मण, हा जानकि,

(उभौ श्रृणुतः)

**सीता**—(सावेगम्) वच्छ लक्खण, तुवर तुवर अय्यउत्तं परित्तादुं ।
(वत्स लक्ष्मण, त्वरस्व त्वरस्वार्यपुत्रं परित्रातुम् ।)

**लक्ष्मणः**—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम् । आर्ये, किमविदितार्यशौर्येव भाषसे ।

अनभिज्ञा प्रलापानामीदृशां मम वंशजाः ।
इदमाक्रन्दितं प्रायो माया तस्यैव रक्षसः ॥ १९ ॥

**सीता**—ण जुत्तं संसए उवेक्खिदुं ।

(न युक्तं संशये उपेक्षितुम् ।)

**लक्ष्मणः**—

विदलितवतो बाणेनैकेन संयति ताटका-
मपि जितवतो विश्वामित्रस्य सत्रविरोधिनः ।
सह भृगुभुवो गर्वेणेशं च भग्नवतो धनुः
खरनिजयिनस्तस्याप्यार्यस्य हन्त विपत्कुतः ॥ २० ॥

(पुनर्नेपथ्ये)

हा लक्ष्मण, हा जानकि.

**सीता**—(सास्रम्) दाणिं अलं संसएण ।

(इदानीमलं संशयेन ।)

**लक्ष्मणः**—धिक्, महत् संकटमापतितम् ।

आर्यामेकाकिनीं त्यक्त्वा कान्तारे गम्यतां कथम् ।
कथं वा गिरमेतस्य श्रुत्वापि स्थीयतां मया ॥ २१ ॥

**सीता**—(सशोकावेगम्) कुमार, तुवर तुवर दाव भादरं परित्तादुं

(कुमार, त्वरस्व त्वरस्व तावत् भ्रातरं परित्रातुम् ।)

**लक्ष्मणः**—(निश्वस्य)

इयमिह वनसीम्नि निःसहाया
छलबहुलाश्च निशाचराश्चरन्ति ।

अयमहमपि यात एव पश्चात्

किमिह भविष्यति हा विधे विधेयम् ॥ २२ ॥

(सीतां प्रणम्य परिक्रमणं नाटयति)

**सीता**—ण जुत्तं एत्थ एकाए मह अवट्ठाणं । जाव उडअब्भन्तरं गच्छेमि ।

(न युक्तमत्र एकाया ममावस्थानम् । यावदुटजाभ्यन्तरं गच्छामि ।)

(इति निष्क्रान्ता)

**लक्ष्मणः**—(सदृष्टिक्षेपम्)

अव्याकुलगतिरार्यो दिष्ट्यायमितः परापतति ।

कुहनामृगं निमेषान्नियतमिषोरामिषं कृत्वा ॥ २३ ॥

(इत्युपसर्पति)

(प्रविश्य)

**रामः**—

भवतु हरिणः सोऽयं मायापरः क्षणदाचरो

मम किमियता हीनं लब्धं हि पत्रिभिरामिषम् ।

तदपि कृतकं तस्याक्रन्दं निशम्य ससाध्वसा

भवति सुतरां सीता जानातीदं तु स लक्ष्मणः ॥ २४ ॥

(अग्रतो दृष्ट्वा)

हन्त, सौमित्रिरपि सत्वरमितोऽभ्येति ।

**लक्ष्मणः**—(उपसृत्य) आर्य, हतः किमाततायी ?

**रामः**—

त्वदुक्तं सौमित्रे परिणतमितः कूटहरिणो

नयन्मां मारीचः समजनि शरस्यापि विषयः ।

त्वमेवं तत्त्वज्ञः कथमिह विदेहाधिपसुता-
मरण्ये हित्वैकामनुपतसि साशङ्क इव माम् ॥ २५ ॥

**लक्ष्मणः**—आर्य, दुरात्मनस्तस्य तादृशमाक्रन्दितं श्रुत्वा सोद्वेगयार्यया बहुश आश्वास्यमानयापि बलात् त्वत्संनिधिमहं प्रेषितः ।

**रामः**—मन्ये दुरात्मनस्तस्य राक्षसहतकस्याक्रन्दितं श्रुत्वा मम किमप्यत्याहितमाशङ्कमाना भीतभीता जानकीति ।

(उभौ परिक्रम्योटजाभ्यन्तरं प्रविश्य सीतामदृष्ट्वा ससंभ्रममितस्ततोऽन्विष्यतः)

**लक्ष्मणः**—(राममुद्वीक्ष्य सोद्वेगम्)

अविरलगलद्बाष्पा दृष्टिर्गतं स्खलितोत्तरं
करुणकरुणा वाचो मात्रातिगः श्वसितानिलः ।
वदनमधिकम्लानं कार्श्यं ययौ च वपुः क्षणा-
दयमुपगतः प्रायेणास्यापि चेतसि विभ्रमः ॥ २६ ॥

तन्न युक्तं मम सांप्रतमन्यतो गमनम् । तथाप्यार्यायाः प्रत्यानयनं विना नान्यदस्य शोकोपशमनहेतुः ।

**रामः**—आह्वयामि तावदिमां किंचिदुच्चैः । जानकि जानकि, मैथिलि मैथिलि, वैदेहि वैदेहि, धरणिसुते धरणिसुते, सीते सीते, क्व यातासि ?

**लक्ष्मणः**—(स्वगतम्) कष्टमुन्माद इव रामचन्द्रस्य ।

अधुनैष विलङ्घ्य वा पयोधीनपि कृत्वा समरं निशाचरैर्वा ।
रघुवीरपदाम्बुजप्रभावात् पुनराहर्तुमलं भवेयमार्याम् ॥ २७ ॥

(परिक्रामन् निवृत्य, साञ्जलिबन्धम्)

रामस्य पञ्चवटि जागृहि रक्षणाय
सीतावियोगविधुरस्य विनोदनैस्त्वम् ।
गोदावरि त्वमपि देवि तरङ्गवातै-
राश्वासयैनमरविन्दविमर्दशीतैः ॥ २८ ॥

(इति निष्क्रान्तः)

**रामः**—(कर्णं दत्वा) कथमुटजाङ्गणचूतवाटिकायामुत्तरमिव श्रूयते मञ्जुभाषिण्याः । (परिक्रामन् विभाव्य) धिक्, प्रियतमालापसंवादिना परभृतरुतेन प्रतारितोऽस्मि । पृच्छामि तावदिममेव ।

(सबहुमानम्)

पञ्चमोऽपि तव कोकिल स्वरः षष्ठ एष मदनस्य सायकः ।
श्लाघ्यतामितरदुर्लभामिमां धारयाशु मम दर्शय प्रियाम् ॥२९॥

ततश्च,

मलयमरुतं श्वासेनाङ्गेन चम्पकसंपदं
करतलरुचा रक्ताशोकं मुखेन सरोरुहम् ।
अधररुचकेनातन्वाना नवाम्रदलश्रियं
तव सुवदना कुर्यान्नित्यं वसन्तमहोत्सवम् ॥ ३० ॥

(विभाव्य) कथमयमसंभावितास्मदाभाषणश्चूताङ्कुरानास्वादयितुमारमते । किममुना स्वकार्यैकप्रसक्तेन ? यावदस्याप्युपजीव्यं सहकारमेवाभ्यर्थये ।

संगीतगेहमसि भृङ्गविलासिनीनां
त्वत्संगमेन सुरभिर्मलयानिलोऽपि ।

शाखास्तवैव खलु पुष्पशरास्त्रशाला-
स्तत्किं न येन जगति प्रथितो रसाल ॥ ३१ ॥

(अञ्जलिं बद्ध्वा)

एहि सहकार देहि प्रतिवचनं दर्शयाशु वैदेहीम् ।
अथवा कथं नु घटतामर्थोऽयं स्थावराद्भवतः ॥ ३२ ॥

किंतु,

इहैव यदि मे सुभ्रूरायास्यति तदा भवान् ।
रामस्य व्यसनं तस्यै निवेदयितुमर्हति ॥ ३३ ॥

(परिक्रम्य)

रक्ताशोकतरुः स एष सदयं गोदावरीवारिभि-
र्यं पुत्रीकृतमत्र वर्धितवती सीता स्वहस्ताहृतैः ।
संप्रत्येव हि वीक्षितुं मृगदृशो वक्त्रश्रियं वाञ्छता
यस्यादाय मया नवं किसलयं कर्णावतंसीकृतम् ॥ ३४ ॥

(उपगम्य)

क्व नु गतवती बालाशोक प्रिया मम कथ्यतां
न खलु भवतो वात्सल्येन व्रजत्यनिवेद्य सा ।
क्षणमपि तया रामः सारङ्गलोचनया विना
न हि निवसत्येतन्मन्ये तवापि परिस्फुटम् ॥ ३५ ॥

अथवा मातुरदर्शनक्लेशविह्वलो मयैवाश्वासनीयः । (अन्यतो दृष्ट्वा) एष खलु सीतासंवर्धितो मयूरशावः ।

(उपसृत्य)

अयि शंस शिखावल त्वमेव
स्थितवानङ्गणबालनीपमूर्ध्नि ।
उटजान्तरवासिनी क्व याता
विपिने साध्वसिनी विलासिनी मे ॥ ३६ ॥

(विभाव्य) किमयं दक्षिणां दिशमुद्दिशन्नुड्डीनः । नूनं मदर्थं सीतान्वेषणपरः स्यात् ।

(सश्लाघम्)

तिर्यञ्चमपि जात्यैनं बहुमन्येतरामहम् ।
यः सीतान्वेषणे सक्तः स हि रामस्य बान्धवः ॥ ३७ ॥

त्वमपि गमितो दैवेनाद्यासि बर्हिण शोच्यतां
कथय पुरतः का वा वल्गत्पयोधरमण्डलम् ।
तरलनयना तालैः शिञ्जानकाञ्चनकङ्कणै-
स्तव सुललितं तन्वी तन्वीत ताण्डवशिक्षणम ॥ ३८ ॥

(सदृष्टिक्षेपम्)

इयं हि नवमालिका तरुरयं नवश्चम्पको
यथोचितमिमावुभौ दयितया कृतौ दम्पती ।
मिथः सति समागमे मधुमिषाद्वधूः स्वेदिनी
पतिः पुलकजालकं वहति कोरकव्याजतः ॥ ३९ ॥

(उपसृत्य)

वद चम्पक वामलोचना न हि ते लोचनगोचरं प्रयाता ।
कुटिलालकसंस्तवेन यस्याः सुलभो भृङ्गसमागमस्तवापि ॥ ४० ॥

(विचिन्त्य)

एवं खल्वातुराणां न हिताहितविवेकः ।

य एष सीताविरहातुरं मां दग्धुं प्रवृत्तस्य मनोभवस्य ।
आग्नेयमस्त्रं कुसुमापदेशाद्धत्ते स किं दर्शयति प्रियां मे ॥ ४१ ॥

(किंचुदुपसृत्य पुरतो दत्तदृष्टिः)

एष हि केसरतरुः कुसुमैर्यस्य स्रजं मया ग्रथिताम् ।
परिरम्भणोत्सवेष्वपि कान्ता कण्ठावलम्बिनीं सहते ॥ ४२ ॥

(उपसृत्य)

आचक्ष्व मे वकुल किं महिलात्र दृष्टा
तूष्णीं स्थितोऽसि ननु तेऽस्ति रुषोऽवकाशः ।
सा विस्मितेन भवतो मुकुलानि तन्वी
त्वत्सौरभं जयति निश्वसितं च तस्याः ॥ ४३ ॥

यावदन्यमवकाशमवगाहे । (तथा कृत्वा)

बालोऽयं पुरतः प्रियालकतरुर्नात्र प्रियालापिनी

(परिक्रामितकेन)

नम्रः पुष्पभरैरयं कुरवको नास्त्यत्र तुङ्गस्तनी ।

(किंचिदन्तरमतीत्य)

आलीनभ्रमरालिरेष तिलको नैवात्र लोलेक्षणा

(अन्यतो गत्वा)

पुंनागोऽयमुदीर्णकेसरभरो नात्रापि मे सुस्मिता ॥ ४४ ॥

तत्कथं पुनरधिगन्तव्यः प्रियोदन्तः? नन्वयं मन्दानिलोऽनुयोक्तव्यः। (उपसृत्य)

गोत्रे चन्दनशीतले त्वमुदभूः सेव्यः सदा भोगिना-
मुल्लासाय भवस्यलं सुमनसामामोदवान् वीजसि।
मन्त्रित्वं भजसे च मन्मथमहाराजस्य दाक्षिण्यवा-
नेवं त्वं गुणिनां वरः प्रणयिनीमेह्येहि मे दर्शय ॥ ४५ ॥

क्वचित् किसलयाश्रयं क्वचन राजरम्भान्वयं
क्वचिद्भ्रगनविभ्रमं क्वचन मल्लिकामेलनम्।
क्वचित् कमलसंस्तवं क्वचन चक्रिकाश्लेषणं
क्वचित् कुवलयाकरव्यतिकरं च यातो भवान् ॥ ४६ ॥

(विभाव्य) अये, किसलयचलनानुगतिरयमपक्रान्तवानेव मम प्रियामन्वेषयितुम्। सन्ति खलु परोपकारव्यसनिनः सन्तः। भवतु। विचिताः खल्विमाः पर्णशालाभ्यर्णभूमयः। (निर्गत्य) क्व वा मया प्रियाप्रवृत्तिरधिगन्तव्या? हन्त हन्त,

दुर्लभदयितान्वेषणदुर्वारमनोरथस्य मे भ्रमतः।
तत्पूर्वपदे देशे स्थातुमपि ददाति नो दैवम् ॥ ४७ ॥

(स्तोकमन्तरं गत्वा)

प्रवालपाटलाभेन शुकश्चञ्चूपुटेन माम्।
नखलुब्धमयं हन्त कान्तायाः स्मारयत्यलम् ॥ ४८ ॥

(उपसृत्य) वयस्य वनशुक, ननु त्वमनङ्गमङ्गलपाठकोऽसि।

बिम्बच्छायामधरमणिना दाडिमीबीजकान्ति
दन्तैः कुर्वत्यलकमहसा राजजम्बूफलाभाम् ।
दृष्टा किं ते सुतनुरथवा मञ्जुभाषिण्यदृष्टा
येनाद्यापि त्यजसि न पुनः प्राप्य नेपु त्वमास्थाम् ॥ ४९ ॥

(अन्यतः परिक्रामन्नग्रतो विलोक्य) एप खलु लवङ्गतरुमूलबद्धमण्डलाभिर्हरिणीभिरन्वास्यमानः कृष्णसारः । अनुयोक्ष्ये तावदेनम् (विभाव्य) मन्ये सांप्रतमवसरो ममाभियोगस्य । यतः,

विसरद्वनपुष्पसौरभभ्रमदिन्दिन्दिरगीतिरागतः ।
दरमीलितलोचनं स्थितो मुखमुत्कण्ठमयं वहन् मृगः ॥ ५० ॥

(क्षणमात्रं स्थित्वा)

कुटिलमलके शोणं बिम्बाधरे तरलं दृशो-
र्वचसि मधुरं मन्दं लीलास्मिते नतमंसयोः ।
उरसिजयुगे तुङ्गं मध्ये कृशं जघने घनं
कथय विपिने दृष्टं सारङ्ग किं मम जीवितम् ॥ ५१ ॥

(विभाव्य) हन्त मामपि कृतप्रणयप्रयत्नं न गणयत्येषः । किं वा निदानमविनयस्यास्य । (विचिन्त्य) आ ज्ञातम्;

जितनयनकान्तिरेष तृणचरणः शरणतां तया नीतः ।
संप्रति तु गर्वितः स्यात् कथं न तस्यामदृश्यायाम् ॥ ५२ ॥

किं मम पराभ्युदयासहिष्णुनानेन ? (परिक्रामितकेन सदृष्टिक्षेपमावेगं नाटयन्) तथ्यमतिस्नेहः पापशङ्कीति । यतः,

आशङ्क्य मे किमपि रात्रिचरैरभद्रं
देहं निजं नियतमुज्झितुमीहमाना ।
ज्वालाकलापपरिवल्गनदारुणेऽस्मिन्
दावानले निपतितुं दयिता प्रवृत्ता ॥ ५३ ॥

वारयामि तावदेनाम् ।

विरम विरम साहसादकाण्डे
सुतनु संनिहितः स एष रामः ।
अयि तव विरहानलेन दग्धं
विरचय निर्वृतमेनमङ्गकैस्त्वम् ॥ ५४ ॥

अथवा सीतासंस्पर्शपावने तनूनपाति पातयामि तनूमिमाम्

(इति सत्वरमुपसृत्य)

लोहितप्रसवशालि पलाशारण्यमेतदभितो न दवाग्निः ।
काचिदन्तरगता च मनोज्ञा वल्लरी न हि विदेहसुता मे ॥ ५५ ॥

दिष्ट्या सांप्रतमपि दत्तावकाशोऽस्मि दयितान्वेषणाय दैवेन ।

(इति परिक्रामन्नग्रतोऽवलोक्य)

अनुवनलताकुञ्जं गुञ्जन्नुपैति निवर्तते
विरचयति न स्वादौ पुष्पासवेऽपि कुतूहलम् ।
भ्रमति च यतो दूरादिन्दिन्दिरोऽहमिवायम-
प्यपगतवर्ती कान्तामन्वेषयत्यधिकोत्सुकः ॥ ५६ ॥

प्रष्टव्य एव गतबहुदेशान्तरोऽयं मया । (उपसृत्य)

कुन्दारविन्दकुवलयमधूकबन्धूकचम्पकैः खचिता ।
अपि चञ्चरीक दृष्टा काचन संचारिणी लतिका ॥ ५७ ॥

(विभाव्य) स्वदारान्वेषणपरोऽयं न पश्यत्येव मे कान्ताम् । (पुरोऽवलोक्य) इयं हि गोदावरी भगवती । (निश्वस्य)

इह खलु तरुमूले सा निषण्णा नतभ्रू-
रिह सुचिरमरंस्तोपान्तवानीरकुञ्जे ।
इह खलु कलहंसैः सैकतेषु व्यहार्षी-
दिति नियतदृशो मे हन्त शान्तिः कदा नु ॥ ५८ ॥

शातोदरी क्व नु गता गोदावरि दर्शयाशु वैदेहीम् ।
आसन्ध्यमर्चयति मे सुमुखी ननु रक्तसन्ध्यकैर्भवतीम् ॥ ५९ ॥

अथवा,

शैवालप्रकरेण कुन्तलभरं वक्त्रश्रियं पङ्कजै-
र्वीचीभिर्भ्रुवमक्षिणी कुवलयैर्बाहुं मृणालाङ्कुरैः ।
चक्राह्वैः स्तनकुम्भविभ्रममथावर्तेन नाभिह्रदं
श्रोणी सैकतमण्डलेन सहसा निर्माय तां देहि मे ॥ ६० ॥

(उपसृत्य विभाव्य च)

कथमप्रतिवचनेनैवावतिष्ठत इयम् । (विचिन्त्य) न खलु सीताविलोपपातकिनं मामभिमुखीकुर्यादियम् । अपसरामि तावदहमेव । (तथा कृत्वा सदृष्टिक्षेपम्) नन्वयं मैथिलीसहायस्य मे विलाससौधायमानो माल्यवान् । अस्य खलु गुहागृहे जातु,

तस्या गण्डतले मया विलिखिता पत्रावली धातुन
वासन्तीं पुलके सति स्मितवतीं सा वञ्चयन्ती सखीम् ।
सीता निर्झरमारुतानपदिशन्त्यभ्यर्णरत्नस्थले
संक्रान्तप्रतिमं निरीक्ष्य च मुखं स्विन्नं भृशं लज्जिता ॥ ६१ ॥

तदिमततिदुःखदर्शनं नोपसर्पामि । (परिक्रामन्) अये, करिणी-सहायोऽयमधिमार्गमुपगतो मत्तमातङ्गयूथपतिः । (सस्पृहम्)

करधृतनलिनीदलातपत्रो मृदुतरलीकृतकर्णतालवृन्तः ।
चलदलिबृन्दचारुगीतचाटुः प्रियकरिणीमनुवर्तते गजेन्द्रः ॥ ६२ ॥

किंच,

उपगम्य समुन्नतैकपादं मदतन्द्रीमनुसंदधानमन्तः ।
रदनेऽस्य रसात् स्वमक्षिकोणं ननु कण्डूयितुमुद्यता करेणुः ॥ ६३ ॥

पृच्छामि तावदिमम् ।

ब्रूहि त्वं द्विरदेन्द्र चन्द्रवदना किं दृश्यते जानकी
जानीषे न यदि ब्रवीमि भवतस्तल्लक्षणं श्रूयताम् ।
ऊरू त्वत्करकाण्डबन्धुरतरौ त्वत्कुम्भकल्पौ कुचौ
चारी चङ्क्रमचातुरीं च सुतनोरूरीकरोत्येव ते ॥ ६४ ॥

(विभाव्य) अयमनाकर्णितमद्वचनः प्रियां करेणुमहिमकरकिरणता-पासहां करशीकरैराश्वासयति । अनुभवतु तावदयं कान्तानुवर्तनसुखम् । (अन्यतो दृष्ट्वा) अये कोऽयमनेकभुजपरिघभीषणाकारो राक्षसः प्रणयिनीं मे कलकरुणाक्रन्दितां हरति? (इति निषङ्गाद्बाणमादाय विभाव्य च) हन्त, सादृश्याद्विप्रलब्धोऽस्मि । कुतः,

तापिञ्छो घननील एष मलिनाकारो न नक्तंचर-
स्तस्यैते विटपाः प्रकामविकटा नाभोगवन्तो भुजाः ।
तत्रेयं नवपल्लवा वनलता नालंकृता जानकी
किंचैतत्कुररीरुतं सकरुणं दीनं न तत्क्रन्दितम् ॥ ६५ ॥

(स्तोकमन्तरं गत्वा) हन्त, परिश्रान्तोऽस्मि । (इति धनुरवष्टभ्य क्षणमात्रं स्थित्वा)

पम्पा कृतानुकम्पा संप्रति सीतावियोगतप्तं माम् ।
कल्हारकरविकीर्णैराश्वासयतीव शीकरैः शीतैः ॥ ६६ ॥

(उपसृत्य)

साक्षादिव वनलक्ष्मीरिहागता मैथिली त्वया पम्पे ।
कच्चिन्मम रम्भोरूरम्भोरुहवनविहारिणी दृष्टा ॥ ६७ ॥

(विभाव्य) नूनं सारसरुतापदेशेन मामसौ पृच्छति ' कुतः कथं वा गता जानकी ' इति । आवेदयामि तावद्भूतार्थम् ।

नीतोऽस्मि केनचिदहं कुहनामृगेण
दूरं पुनः सपदि पञ्चवटीं निवृत्तः ।
अन्वेषयन्नपि न तामवलोकयामि
जीवामि चैव किमतः परमस्ति कष्टम् ॥ ६८ ॥

(विचिन्त्य) भगवति पम्पे, अतः परं त्वमपि शोचनीयासि । यतः,

गलिततिलकमाकुलार्द्रकेशं
पुलकितगण्डमनञ्जनारुणाक्षम् ।

कलयसि धवलाधरं न तस्याः
किमपि मुखं जलकेलिदोहलिन्याः ॥ ६९ ॥

(सदृष्टिक्षेपम्) कष्टमियं मम विरहतापनिःसहा कण्ठदघ्नमवगाहते सरः । (उपसृत्य विभाव्य च)

कथमिदं विलसच्छदमुन्मदभ्रमरमुज्ज्वलकर्णिकमम्बुजम् ।
न मम वामदृशो रुचिराधरं तरललोचनमिन्दुसमाननम् ॥ ७० ॥

(पार्श्वतो दृष्ट्वा) शक्यमिदानीं किंचिदाश्वसितुम् ।

ननु दृश्यत एव कण्ठनालाद्गलिता हारलता सरोरुहाक्ष्याः ।
(आदातुमिच्छन्, सनिर्वेदम्)
शरदिन्दुमरीचिकोमलेयं सरसा हंसमुखच्युता मृणाली ॥ ७१ ॥

(इति परिक्रामन्)

अन्योन्यदत्तमृदुजग्धमृणालभङ्गमुत्पक्ष्मलप्रसृतपक्ष्म कृताङ्गपालि ।
कन्दर्पकेलिकलकूजितकान्तमेतदाभाति हंसमिथुनं सविलासमग्रे ॥७२॥

(उपसृत्य)

कथयतमिह दृष्टा किंनु मे वल्लभा या
मृदुलगतिविलासैर्व्रीडितौ वां व्यतानीत् ।
किमपि मनसि कृत्वा हन्त मात्सर्यमन्त-
र्मयि विरहिणि कार्या न ह्युपेक्षा युवाभ्याम् ॥ ७३ ॥

किंच स्मरतं तस्या वां प्रत्युपकारम् ।

अम्भोजं वदनेन सौरभभृता बिम्बाधरच्छायया
बन्धूकं कुमुदं स्मितेन शफरव्यावर्तनं चक्षुषा ।

आलापैः शुकजल्पितं स्तनतटीहारेण तारावलिं
सा वेलास्वपि वापिकासु युवयोर्निर्माय तुष्टिं व्यधात् ॥ ७४ ॥

अथवा न तावदिमौ मन्मथाद्वैतसंधायिनौ मद्वार्तोपन्यासादुद्वेजनीयौ ।

रचितः सुखान्तरायः कस्य कदा वा मया न विज्ञातम् ।
तस्यैवायं हि विपाकः कथं हि भूयस्तमेव कुर्वीय ॥ ७५ ॥

(अन्यतो दृष्ट्वा)

एतानि संनिदधते खलु वीचिडोला-
लीलाविहारतरलीकृतपक्ष्मलानि ।
उत्कण्ठितानि दरकुड्मलितेक्षणानि
रागान्वितानि मिथुनानि रथाङ्गनाम्नाम् ॥ ७६ ॥

(क्षणं प्रतिपाल्य) कथमद्यापि तथैव वर्तन्ते । (सरोपमिव)

सर्वैः खलु परिभूयते याचकजनः ।

सीताप्रवृत्तिमधिगन्तुमना भवद्भ्यो
रामः किलैष भवतां समयं न लब्धा ।
अद्य प्रभृत्यनुनिशं वचनान्मदीया-
दायात यूयमितरेतरविप्रयोगम् ॥ ७७ ॥

(परिक्रम्यावलोक्य च सहर्षम्)

पाटलाधरदला घनस्तनी लोभनीयभुजनालशोभिनी ।
सुस्मिता कुटिलनीलकुन्तला जानकी कथमियं समागता ॥ ७८ ॥

यावदस्याः परिष्वङ्गप्रणयी भवामि । (विभाव्य, सविषादम्) आः, दूरे तावदेवंविधानि भागधेयानि रामस्य ।

आताम्राभं किसलयमिदं नैव बिम्बाधरश्री-
रेषा शाखा स्तबकनमिता नैव बाहुः स्तनाङ्कः ।
एतत्पुष्पं न हसितमलिश्रेणिरेषा न वेणी
वासन्तीयं वनभुवि लता वल्लभा मे न सीता ॥ ७९ ॥

(परिक्रम्य सदृष्टिक्षेपम्)

तदिदं मणिनूपुरं प्रियायाः पतितं पादसरोरुहादधन्यम् ।
प्रसरन्नवमौक्तिकांशुजालव्यपदेशेन विमुञ्चतीव बाष्पम् ॥ ८० ॥

(आदाय) एतावता प्रियतमाश्लेषनिर्वृतिमनुभवामि । नन्वधुना,

तुलयति चरणश्चलद्भुवो विरहितमौक्तिकनूपुरध्वनिः ।
अनुदितकुसुमं च पल्लवं व्यपगतहंसरवं च पङ्कजम् ॥ ८१ ॥

(परिक्रामन् विलोक्य)

मिहिकालघु मैथिलात्मजाया बहुमानादनसूयया वितीर्णम् ।
तदिदं हरितारुणान्तरेखं तरुशाखाग्रथितं स्तनोत्तरीयम् ॥ ८२ ॥

(विचिन्त्य) नूनमिदमम्बरचरेण केनचिदपह्रियमाणायाः स्तनतटादपभ्रश्यन्निपतितं स्यात् । तदिमामेव सरणिमनुसरामि । (इति तथा कृत्वा) हन्त,

आशोक एष स चकोरदृशो वतंसः
कर्णार्पितेयमपि केसरमालिका सा ।

एतानि तानि खलु गर्भकचम्पकानि
सेयं नमेरुकुसुमग्रथिता च काञ्ची ॥ ८३ ॥

(निश्वस्य सविषादम्) अथवा,

एकाकिनी सा विपिने चरन्ती विकीर्णसूनप्रकरे समन्तात् ।
प्रसह्य हिंस्रैः प्रमदा मदीया हृतावलुप्तावथवा भवेत किम् ॥ ८४ ॥

(किञ्चिदन्तरं गत्वा विलोक्य)

प्रत्यग्रक्षतजारुणीकृतमुखाः कस्य स्युरेते शराः
कस्याशीविषभोगभीषणमिदं भग्नं तथा कार्मुकम् ।
कस्यायं त्रुटितध्वजोऽवमृदितस्रस्ताक्षकूपो रथः
कस्येदं च विभाति रक्षस इव क्षोण्यां विगाढं पदम् ॥ ८५ ॥

(विभाव्य) प्रायः केनापि राक्षसेन सुतनुरपहृता स्यात् । (पार्श्वतोऽवलोक्य) कथमसंनिहितो रक्षोवधकृतक्षणस्य मे साह्यकरो वत्ससौमित्रिः । यः खलु,

सार्धं मया गाधिवरान्महर्षेरवाप्तदिव्यास्त्रसुसंप्रदायः ।
लेभे धनुर्वैष्णवमक्षयेषुपूर्णौ निषङ्गावपि कुम्भयोनेः ॥ ८६ ॥

तदहमसहाय एव,

बाणैः कल्पक्षयक्रुध्यत्कृतान्तापाङ्गभीषणैः ।
अराक्षसं जगत्कृत्वा प्रत्यानेष्यामि जानकीम् ॥ ८७ ॥

(इति बाणं तूणादुद्धर्तुमिच्छति)

(नेपथ्ये)

जय जय जगत्पते कौसल्यानयनानन्दकन्दलनकालमेघ रामचन्द्र कृतमधुना ते प्रयासेन ।

सीतां हठादपहृतां रुन्धन् पथि पातितो दशास्येन ।
आवेदयज्जटायुः शत्रुघ्नज्यायसे दिवं यास्यन् ॥ ८८ ॥

ततश्च,

वालिन्युन्मूलिते द्राक्प्रमुदितमनसः सूर्यपुत्रस्य साह्या-
द्बद्धे सेतौ कपीन्द्रैर्लवणजलनिधिं लक्ष्मणो लङ्घयित्वा ।
हत्वा पौलस्त्यमाजौ सह रजनिजरैः सेन्द्रजित्कुम्भकर्णं
देवीमादाय भूयस्तव सविधमसावागतः पुष्पकेण ॥ ८९ ॥

**रामः**—(श्रुत्वा दृष्ट्वा च)

इतो विमानादवतीर्य दिव्यादसंख्यरक्षःकपिसेवितोऽयम् ।
सीतां पुरस्कृत्य वियोगखिन्नां सौमित्रिरभ्येति ममोपकण्ठम् ॥९०॥

(प्रविश्य यथानिर्दिष्टो लक्ष्मणः सीता च)

**सीता**—जेदु अय्यउत्तो ।

(जयत्वार्यपुत्रः ।)

**रामः**—(सीतां करे गृहीत्वा) प्रिये सीते,

भूयोऽपि भाग्यशेषेण प्रत्यावृत्तासि संप्रति ।
गतेव संपदन्वेव दृष्टिर्विद्येव विस्मृता ॥ ९१ ॥

**लक्ष्मणः**—जयत्वार्यः । (इति पादयोर्निपत्य)

सुग्रीवो नः प्रियसुहृदसौ चक्रवर्ती हरीणा-
मस्यामात्येष्वयमतिबलो वायुसूनुर्हनूमान् ।
अस्मान्प्राप्तः शरणमनुजो रावणस्यैष वीरः
सर्वेऽप्येते विदधति नमस्तुभ्यमालोकयैतान् ॥ ९.२ ॥

**सीता**—एसो सेउणिवन्धादो पुडमं एव्व समुद्दलंघणं विरइअ लंकामुवअदो मं अस्सासिदवंतो हणुमंतो ।

(एष सेतुनिबन्धात्प्रागेव समुद्रलङ्घनं विरचय्य लङ्कामुपगतो मामाश्वासितवान् हनुमान् ।)

**रामः**—(सर्वान् सबहुमानमालोकयन्)

विजित्य किल वासवं युधि चकार कारागृहे
सलीलमुदचालयत् किल भुजैः कुबेराचलम् ।
मुहुः किल निजैर्मुखैर्गिरिशमर्चयामास यो
हतः स इति कीर्तनं किमपि लब्धमिक्ष्वाकुभिः ॥ ९.३ ॥

**लक्ष्मणः**—(साञ्जलिबन्धम्)

पौलस्त्य एष कृतवीर्यसुतेन बद्धो
जन्ये जघान किल तं जमदग्निरामः ।
आर्येण सोऽपि गमितः सहसा प्रशान्ति
को वात्र यस्त्रिजगतां विजयी प्रवीरः ॥ ९.४ ॥

(नेपथ्ये दुन्दुभिध्वनेरनन्तरम्)

चत्वारः सहजा मनुष्यवपुषा यूयं हरेरंशकाः
सीतेयं कमला वनौकस इमे सर्वेऽपि नाकौकसः ।
याताः संप्रति ताश्चतुर्दश समाः साकेतमेत्य त्वया
भूयोऽपि [1]त्रियुगाविरोधिचरितेनाराधनीयाः प्रजाः ॥ ९५ ॥

(सर्वे शृण्वन्ति)

**रामः**—दिष्ट्याहमम्बरचरैरगस्त्यप्रभृतिभिराराधितोऽस्मि ।

**सीता**—अय्यउत्त किं अवरं अह्माणं कुमारलक्खणो पिअं करेदु ।
(आर्यपुत्र किमपरमस्माकं कुमारलक्ष्मणः प्रियं करोतु ।)

**रामः**—किमतः परं प्रियमस्ति ?

हृच्छल्यं दशकन्धरस्त्रिभुवनस्यासीत् समुत्मूलितः
सुग्रीवश्च विभीषणश्च सुहृदौ स्वे स्वे पदे स्थापितौ ।
चित्ताह्लादनचन्द्रिका त्वमपि मे प्रत्याहृतासि प्रिये
सौमित्रिर्विजयी किमन्यदधुना दिष्ट्या विवर्धामहे ॥ ९६ ॥

तथापीदमस्तु (भरतवाक्यम्)—

काले वर्षन्तु मेघाः फलतु वसुमती भद्रमस्तु प्रजानां
हृद्याः स्वैरं कवीनां खलहृदयभिदः सन्तु विद्याविनोदाः ।
एकावासः कलानां वितरणविभवन्यक्कृतामर्त्यशाखी
सम्राड् जागर्तु दीर्घं हरिहरतनयः श्रीविरूपाक्षभूपः ॥ ९७ ॥

**उन्मत्तराघवं नाम प्रेक्षणकं संपूर्णम् ॥**

---

१ त्रियुगाः ज्ञानशक्त्यादयः षड् गुणाः ।

# पद्यानुक्रमणिका

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, S. India)

| | | Rs. | A. |
|---|---|---|---|
| 1910—1. | A PRELIMINARY LIST OF THE SAṂSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṃskṛt-Devanāgarī) Boards ... 1-8 Cloth ... | 2 | 0 |
| 1912—2. | A DESCRIPTIVE CATALOGUE OF THE SAṂSKṚT MSS. in the Adyar Library. *By* F. O. Schrader, Vol. I, Upaniṣads Cloth ... | 5 | 0 |
| 3. | THE MINOR UPANIṢADS (Saṃskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṃnyāsa Cloth ... | 10 | 0 |
| 1916—4. | AHIRBUDHNYA-SAṀHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṃskṛt). 2 Vols. Cloth ... | 10 | 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṀHITĀ. *By* F. O. Schrader, Cloth ... | 3 | 0 |
| 1920—6. | YOGA UPANIṢADS—20—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | SĀMĀNYA VEDĀNTA UPANIṢADS—24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | VAIṢṆAVA UPANIṢADS—14—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'AIVA UPANIṢADS—15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 3 | 0 |
| 10. | S'ĀKTA UPANIṢADS—8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 2 | 8 |
| 1926—11. | CATALOGUE OF SAṀSKṚT MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | SAṂNYĀSA UPANIṢADS—17—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |

Rs. A.

13. RUKMINI KALYANA MAHĀ KĀVYA by Rājacūḍamaṇi Dikṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... 2 0

1933—14. UNPUBLISHED MINOR UPANIṢADS with the Commentary of Srī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library ... 5 0

1936—15. TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library

Is'a to Aitareya, Vol. I ... 4 8

Chāndogya and Bṛhadāraṇyaka, Vol. II ... 6 0

Vols. 1 and 2 Boards ... 9 8

1937—16. MELARĀGAMĀLIKĀ of Mahavaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... 2 0

1938—17. SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... 5 0

18 PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... 3 0

19 BHAVASAÑKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha —with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... 2 4

20. YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, and Paṇḍit S. Subrahmanya Sastri .. 5 0

21. * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga,

Part 1. Nature—From Macrocosm to Microcosm ... 2 8

Part 2. Man—From Atom to Man ... 2 8

Part 3. God—From Humanity to Divinity ... 2 8

Part 4. Some Practical Applications ... 2 8

1939—22. ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof C. Kunhan Raja. Vol. I ... 6 0

1940—23. THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... 3 0

1941—24. SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... 5 0

25. BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of Upaniṣad Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library 4 0

* *Published under the auspices of the Adyar Library Association.*

Rs. A.

26. SĀMAVEDA-SAṂHITĀ—With the Commentaries of Mādhava and Bharatasvamin Edited *by* Prof. C. Kunhan Raja . 6 0

27. RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V Rangaswami Aiyangar ... 3 8

28 VARIVASYĀRAHASYAM of Bhasuranandanatha (2nd Edition) *by* Paṇḍit S Subrahmanya Sastri (with English Translation) 2 8

29. VYAVAHARANIRṆAYA OF VARADARAJA Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar, and A N Krishna Aiyangar ... 15 0

30. SAṂGĪTARATNAKARA—With the Commentaries of Catura Kallinatha and Siṃhabhūpala. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol. I. (Adhyaya I) ... 9 0

1942—31. CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 1 ... 5 0

32. ALAMBANAPARIKṢA AND VṚTTI *by* Dinnaga with English translation, Tibetan text etc *by* Paṇḍit N Aiyaswami Sastri ... 3

33. SOME CONCEPTS OF ALAÑKARA SASTRA *by* V. Raghavan, University of Madras ... 1 0

34 VEDĀNTAPARIBHAṢA—with English translation and Notes, *by* Prof. S. S. Suryanarayana Sastri ... 2 12

35. A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K Madhava Krishna Sarma Vol. I—Vedic ... 15 0

36. S'RĪ PAÑCARĀTRA RAKṢA of S'rī Vedanta Des'ika Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedanta S'iromaṇi T. Venugopalacharya ... 4 8

37. CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... 6 0

38 CATURDAS'ALAKṢAṆI OF GADADHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... 1 8

1943—39. PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P N Srinivasachari ... 10 0

40. VĀDĀVALI OF JAYATĪRTHA with English translation and Notes *by* P. Nagaraja Rao ... 4 0

41. SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... 2 12

| | | Rs. | A. |
|---|---|---|---|
| | 42. USĀṆIRUDDHA of Rāma Pāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |
| 1944— | 43. SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinatha and Siṁhabhūpala. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyayas 2--4) ... | 9 | 0 |
| | 44. ĀS'VALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvamin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... | 6 | 4 |
| | 45. ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| | 46. CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| | 47. ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945— | 48. RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| | 49. ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| | 50. THE ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| | 51. SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter 1. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |
| | 52. VAIṢṆAVA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 | 0 |
| 1946— | 53. NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I– Books i and ii) ... | 4 | 0 |
| | 54. PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāma Pāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma. ... | 4 | 4 |
| | 55. SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary. ... | 3 | 12 |
| 1947— | 56. THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| | 57. UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya. ... | 1 | 12 |
| | 58. ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 | 8 |

| | Rs. | A. |
|---|---|---|
| 39 JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary. ... | 20 | 0 |

## PAMPHLETS

### 1939

| | | |
|---|---|---|
| A VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... | 0 | 3 |

### 1940

| | | |
|---|---|---|
| THE RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma. | 0 | 4 |

### 1942

| | | |
|---|---|---|
| THE ṢAṬPAÑCĀS'IKĀ, a Silpas'āstra manual. (Reprinted from the Adyar Library Bulletin, February 1942). Edited *by* K. Madhava Krishna Sarma ... | 0 | 5 |
| THE PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma, ... | 0 | 6 |
| A List of Manuscripts (Reprinted from the Adyar Library Bulletin, Oct., 1942) ... | 1 | 0 |
| THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale ... | 0 | 6 |

### 1943

| | | |
|---|---|---|
| VIS'EṢĀMṚTA of Tryambaka Mis'ra. An orthographical lexicon. Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, May, 1943) ... | 0 | 12 |
| A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprinted from the Adyar Library Bulletin, Oct. 1940, May and October, 1943) ... | 0 | 12 |

### 1946

| | | |
|---|---|---|
| DHARMACAURYARASĀYANAM—Edited by H. G. Narahari, (Reprinted from the Adyar Library Bulletin, October and December 1946) .. | 1 | 12 |

## IN THE PRESS

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries. Vol. II *by* Paṇḍit N. Santanam Aiyar.

ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar.

SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III.

ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II, edited by Dr. C. Kunhan Raja

HORĀS'ĀSTRA—with the commentary Apurvarthapradars'ika *by* A. N Srinivasaraghava Aiyangar.

SĀLISTAMBHASŪTRA—Restored from Tibetan and Chinese Sources—*by* Paṇḍit N. Aiyaswami Sastri.

A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. VI—Chandas, Kos'a and Vyākaraṇa

SAṀGĪTARATNĀKARA, English Translation—Vol. II, *by* Prof C. Kunhan Raja

SAṀKALPASŪRYODAYA OF S'RI VEÑKAṬANĀTHA with the Commentaries Prabhāvilāsa and Prabhāvalī Edited *by* Paṇḍit V. Krishnamacharya

## READY FOR THE PRESS

ĀS'VALĀYANAGṚHYASŪTRA with the Commentaries of Devasvamin and Nārāyaṇa. Vol. II. Edited *by* Svami Ravi Tirtha.

NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja Edited *by* Prof. C. Kunhan Rāja.

GAUTAMASMṚTI—Edited *by* A. N. Krishna Aiyangar

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA—with Commentaries— Edited *by* Paṇḍit N. Santanam Aiyar, Vol. III.

PAKṢATĀ OF GADĀDHARA—with four commentaries *by* Paṇḍit N. Santanam Aiyar.

SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

AVAYAVA OF GADĀDHARA—with commentaries *by* Paṇḍit N. Santanam Aiyar.

SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* H. G. Narahari, Vol. V—Poetry, Drama and Poetics.

S'AIVA AND S'ĀKTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

TEN MAJOR UPANIṢADS—English Translation *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

---